अ० टी०——एवं सूत्रत्रयार्थं विस्तरेण प्रतिपाद्य 'ईक्षतेर्नाशब्दम्' ब्र० सू० १। १। ५ इत्याद्युत्तरसूत्रगतन्यायसंदर्भं भाष्योक्तमेव सिद्धवत्कृत्य समन्वयाध्यायमुपसंहरति—**एतत्समन्वयनिरूपणमिति** । यथाशास्त्रं यथान्यायमस्माभि कृतमिति शेष. । समन्वयनिरूपणफलमाह——**एवमिति** । एवमुक्तप्रकारेण समन्वये बुद्धिस्थतामुपगते सत्यधीतस्वाध्यायस्य समधिगतशब्दन्यायतत्त्वस्य पुंसो यद्वाक्यजन्यं शब्दस्वारस्यजन्यं विज्ञान तदद्वयगत प्रत्यग्ब्रह्मैक्यगतं ततोऽन्यन्न भवत्यर्थान्तरगत न भवत्येवान्यत्तद्विरुद्धार्थविषयमनेकविधं यद्विज्ञान तत्पुंसोऽपराधकृत पुरुषदोषनिबन्धनमेवेत्येव प्रतीतिः प्रत्यय उदियादुत्पद्येतेति योजना । वेदान्तवाक्यरूपप्रमाणगतासभावनापोहेन वाक्यार्थे बुद्धिनियमासिद्धिः समन्वयविचारफलमित्यर्थः ॥ ५६३ ॥

इति श्रीकृष्णतीर्थशिष्यरामतीर्थकृताया सक्षेपशारीरकटीकायामन्वयार्थप्रकाशिकायां समन्वयाभिध. प्रथमोऽध्यायः समाप्त. ॥ १ ॥

